तीति नियमात् जातौ तुल्यौ पक्षौ ८ या=२७ का + इन अतः या= $\frac{२७ का + इन}{८}$

पुनः पिण्डमानमिदं या वसुभिर्भक्तं लब्धं नीलकं शेषमिष्टं प्रकल्प्य पुनर्जातं यावत्तावन्मानम् = $\frac{८ नी + इआ}{१}$ अत्र यावत्तावन्माने तुल्ये अतः

$\frac{२७ का + इन}{८}$ = ८ नी + इआ समशोधनादिना जातं कालकमानम्

= $\frac{६४ नी + ८ इआ — इन}{२७}$ ततः ६४,२७ दृढ़ भाज्यहाराभ्यांरूपक्षेपे जातौ

लब्धिगुणौ १६, ८ अत्र "ते भाज्यतद्भाजक वर्णमाने" इत्यादिना गुण एव नीलकनानं तेन अभीप्सितक्षेप विशुद्धिनिघ्न" इत्यादिना रूपक्षेपीयो गुणोऽय ८ मिष्ट क्षेपेणानेन ८ इआ — इन गुणिते । जातः ६४ इआ-८ इन स्वहारेणानेन २७ भक्ते जातः १० इआ-८ इन ततः इष्टाहतस्व-स्वहरेण युक्त" इत्यादिना कल्पितेष्टपीतक गुणित तद्धारेण सहितो जातं २७ पी × १० इआ — ८ इन = नीलकमानम् नीलकमानेन यावत्तावन्माने उत्थाप्यजातं यावत्तावन्मानम् = २१६ पी + ८१ इआ — ६४ इन, अत्र कल्प्यते पीतकमानं=लो + (न — १) तत उत्थापनेन जातं यावत्तावन्मानम्

=२१६ लो + २१६ इन — २१६ + ८१ इआ — ६४ इन

=२१६ लो + १५२ इन — २१६ + ८१ इआ

=२१६ लो + १५२ इन — १५२ — ८१ + १७ + ८१ इआ

= २१६ लो + १५२ (इन — १) + ८१ (इआ — १) + १७

अत्रान्तिमखण्डत्रये यदि संख्या २१६ तोऽधिकाभवेत्तदा लोहितकस्य तथा ऋणमानं कल्प्यं यथा तन्मान गुणित भूपाश्विभी रहिता सा खण्डत्र-यभवा संख्या धनात्मिका भूपाश्विभ्योऽल्पा च स्यात् । अर्थात् सा संख्या २१६ भिस्तष्टाऽवशेषं तदेवपिण्डमानं ज्ञेयं तस्मिन्नेकादि गुणित भूपा-श्विसमां संख्यां प्रक्षिप्यानेकधा पिण्डमानं साध्यमित्युपपन्नम् अनयैवो-पपत्त्या एकोनिनेष्टर्क्षेत्यादि रामदैवज्ञकृतं पिण्डानयनमुपपद्यते ।

टेङ्राहीति प्रसिद्धे हरपुरनगरे मण्डले सारनाख्ये
विप्रोऽभूद् विदग्धः प्रथितगुणगणो यो द्विवेदीति वित्तः ।
तस्यासन् वह्निसंख्या निजतनुमहसा वह्निवद्भासमानाः
पुत्रास्तेष्वग्रजोऽयं भवति बुधवरः श्रीगरीब द्विवेदी ॥ १ ॥

सूनुना तस्य श्रीरामनिहोरेण सतांमुदे ।
वास्तुमाला सुवृहती संगृहीता प्रयत्नतः ॥ २ ॥

चन्द्रवाणवसुचन्द्र सम्मिते शालिवाहन शकेऽथ फाल्गुने ।
कृष्णपक्ष शिवरात्रिके वृहद्वास्तुमालिक कृतिः समापिता ॥ ३ ॥

॥ शुभम्भूयात् ॥